

यज्ञोपवीतसमीक्षणम्

*******

इज्यते हविर्दीयतेऽत्र यज्+नङ्=यज्ञः । (यज्ञ+उप+वीत) यज्ञोपवीतम् फलितम् । यज्ञार्थं संस्कृतं सूत्रविशेषम्, यज्ञसूत्रम् वा । उपवीतम् (उप+वि+इण् गतौ+क्त) उप समीपार्थकोऽव्ययपदम् । उपनयनसंस्कारेण पवित्रीकृतं वीतं स्व-समीपागतं ब्रह्मचारिकृते नवतन्तुपरिमितं वामस्कन्धात् नाभिपर्यन्तं कटिपर्यन्तं वा लम्बायमानं सूत्रविशेषं यज्ञोपवीतमिति निरुक्तिः । यद्वा यज्ञेन यज्ञस्य यज्ञाय यज्ञाद्वा आगतं यज्ञोपवीतम् । यज्ञोपवीतशब्दार्थ उक्तः स्मृतिसारे- यज्ञाख्यः परमात्मा य उच्यते चैव होतृभिः । उपवीतं ततोऽस्येदं तस्माद्यज्ञोपवीतकम् ॥ इदं यज्ञोपवीतमुपनयनेन सम्भाव्यते,अर्थात् उपनयनसमये यज्ञोपवीतग्रहणं भवति । ब्राह्मणस्य कृतेऽस्य यज्ञसूत्रस्य महती आवश्यकता अस्ति । यज्ञोपवीतं विना विण्मूत्रोत्सर्गं कर्तुं नैव शक्यते, भोजनस्य का कथा तं विना जलपानमपि न कर्तव्यम् । यतोहि मुक्तावल्याम्- विना यज्ञोपवीतेन तोयं यः पिबते द्विजः । उपवासेन चैकेन पञ्चगव्येन शुद्ध्यति ॥ विना यज्ञोपवीतेन विण्मूत्रोत्सर्गकृद्यदि । उपवासद्वयं कृत्वा दानैर्होमैस्तु शुद्ध्यति ॥ अपि च गोभिलेन- सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिख्योव्युपवीतश्च यत्करोति न तत्कृतम् ॥ इति । अस्य उत्पत्तिस्तु ब्रह्मणो जाता । पद्मासनस्थो ब्रह्मा पद्मनालसूत्रेणास्य निर्माणं चकार । यच्चोक्तं स्मृतिप्रकाशे- यज्ञोपवीतं परमं पवित्रं विभूषणं ब्राह्मणलक्षणं च । पद्मासनस्थेन पितामहेन उत्पादितं पंकजनालसूत्रात् ॥ अस्य निर्माणे त्रिदेवानां ब्रह्म-विष्णु-महेश्वराणां महती अनुकम्पा विद्यते । सावित्रीदेवी अस्य जीवन्यासकर्त्री । तथा च – ब्रह्मणोत्पादितं सूत्रं विष्णुना त्रिगुणीकृतम् । रुद्रेण दत्तो ग्रन्थिर्वै सावित्र्या चाभिमन्त्रितम् ॥ संप्रतिके कलौ यज्ञसूत्रं कार्पासयुक्तं प्रतिभाति । तत्प्रमाणन्तु- कृते पद्ममयं सूत्रं त्रेतायां कनकोद्भवम् । द्वापरे राजसं प्रोक्तं कलौ कार्पाससम्भवम् ॥ यज्ञोपवीतस्योत्पत्तिं जानाति ब्राह्मणो न चेत् । स वै वहति भाराय पुस्तकानि यथा वृषः ॥ नाभिपर्यन्तं लम्बायमानं यज्ञोपवीतं धार्यमिति वसिष्ठः । कटिपर्यन्तमिति कात्यायनः । तथा हि- नाभेरुद्ध्र्वमनायुप्यमधो नाभेस्तपःक्षयः । तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः ॥ अपि च कात्यायनः- पृष्ठदेशे च नाभ्यां च धृतं यद् विन्दते कटिम् । तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम् ॥ इति । अस्य यज्ञसूत्रस्य स्थलविशेषे त्रीणि नामानि प्रसिद्धानि सन्ति । ब्रह्मसूत्र-निवीत-प्राचीनावीतभेदात् । देवकार्ये ब्रह्मसूत्रं सव्ये वामस्कन्धे धारणम् । मालवत्कंठावलम्बितं निवीतं मनुष्यकार्ये तर्पणादौ प्रसिद्धम् । अपसव्ये दक्षिणस्कन्धे निवेशितं प्राचीनावीतं पितृकार्ये प्रशस्तम् । यदुक्तं हेमाद्रौ भरद्वाजः- दक्षिणबाहुमुद्धृत्य वामस्कन्धे निवेशितम् । यज्ञोपवीतमित्युक्तं देवकार्येषु शस्यते ॥ कंठावलम्बितं चैव ब्रह्मसूत्रं यदा भवेत् । तन्निवीतमिति ख्यातं शस्तं कर्मणि मानुषे ॥ उत्क्षिप्ते वामबाहौ च दक्षिणस्कन्धमाश्रितम् । प्राचिनावीतमित्याहुः तत्पित्रेष्वेव कर्मसु ॥ मनुनापि- उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः । सव्ये प्राचीनावीती स्यान्निवीती कंठसज्जनम् ॥ ।

कदा नवीनं यज्ञोपवीतं धारणीयमिति विषये शास्त्रान्तरे बहुधा उक्तम् । तत्र उपाकर्मारम्भे (संवत्सरादौ वेदपाठकर्मणि) दानकर्मणि, जननाशौचे, मरणाशौचे, श्राद्धे, चन्द्रसूर्यग्रहणोपरान्ते, यज्ञादौ च नवीनीकर्तव्यम् । उक्तं श्रीरामकल्पद्रुमे ज्योतिषार्णवे च- उपाकर्मणि चोत्सर्गे सूतकद्वितये तथा । श्राद्धकर्मणि यज्ञादौ शशिसूर्यग्रहेऽपि च ॥ नवयज्ञोपवीतानि धृत्वा जीर्णानि च त्यजेत् ॥ कदाचित् अस्पृश्य स्पर्शेन, अभक्षभक्षणेन, सूत्रछेदनेन च नवीनं धारणीयम् ।

एतस्य यज्ञसूत्रस्य परमायुरपि निर्दिष्टोऽस्ति । धारणदिनात् चतुर्मासान्ते अवश्यमेव नूतनं सूत्रं धारणीयम् । यच्चोक्तं गोभिलः- धारणात्ब्रह्मसूत्रस्य गते मासचतुष्टये । त्यक्त्वा तान्यपि जीर्णानि नवान्यनानि धारयेत् ॥ न धारयति मूढात्मा सर्वकर्मसु गर्हितः ॥ अपि चाह्निकसूत्रावल्याम्- सूतके मृतके चैव गते मासचतुष्टये । नवयज्ञोपवीतानि धृत्वा जीर्णानि संत्यजेत् । अत्र मनुः- मन्त्रेण धारणं कार्यं मन्त्रेण च विसर्जनम् । कर्तव्यं च सदा सद्भिर्नात्र कार्या विचारणा ॥ पारिजातेऽपि- यज्ञोपवीतमन्त्रेण धारयेद् ब्रह्मसूत्रकम् । स्मृत्युक्तेन तु मन्त्रेण निष्काश्यं ब्रह्मसूत्रकम् ॥ धारणमन्त्रस्तावत्कौषतकीशाखायां- यज्ञोपवीतेनोपव्ययामि दीर्घायुत्वाय सुप्रजास्त्वाय सुबीर्याय सर्वेषां वेदानामाधिपत्याय यशसे ब्रह्मवर्चसाय । सर्वत्र- यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यद्वा- यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि । त्यागमन्त्रः- ब्रह्माविष्णुमहेशाद्यास्तनूतां देवताः स्मृताः । त्यक्षामि पुण्यकालेऽस्मिन् भवतां तृप्तिहेतवे ॥ अपि च – एतावद्दिनपर्यन्तं ब्रह्मत्वं धारितं मया । जीर्णत्वात्वत्परित्यागः गच्छ सूत्रं यथासुखम् ॥ जीर्णयज्ञोपवीतं शिरोमार्गेण निःसार्य जले निक्षिपेत् ।

कति संख्यकं यज्ञसूत्रं धारणीयमिति चेच्चतुर्थपरिमितमुच्यते , अधिकारि-प्रतिनिधिरूपेण । तथा हि- यज्ञोपवीते द्वे धार्ये श्रोते स्मार्ते च कर्मणि । तृतीयमुत्तरीयार्थं वस्त्राभावे चतुर्थकम् ॥ अधिकारी भेदेन चात्र देवलः- उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते । एकमेव यतीनां स्यादिति शास्त्रविनिश्चयः ॥ विण्मूत्रसमये दक्षिणकर्णे स्थापनीयम् । अन्यथा अशुद्धिर्जायते सूत्रस्य । दक्षिणकर्णे सर्वेषां देवानां तीर्थानां च समावेशोऽस्ति । यच्चोक्तं-आदित्या वसवो रुद्रा वायुरग्निश्च धर्मराट् । विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः ॥ अग्निरापश्च वेदाश्च सोमः सूर्योऽनलस्तथा। सर्वे देवास्तु विप्रस्य कर्णे तिष्ठन्ति दक्षिणे ॥ प्रभासादीनि तीर्थानि गंगाद्याः सरितस्तथा । विप्रस्य दक्षिणे कर्णे वसन्ति मुनिरब्रवीत् ॥ गंगा च दक्षिणे श्रोत्रे नासिकायां हुताशनः । उभयोः स्पर्शनेनैव तत्क्षणादेव शुद्ध्यति ॥ इति ।

अस्य निर्माणप्रणालीविषयेऽपि शास्त्रं न मौनम् । अवितथं तत्त्वं प्रकाशयति । ग्रन्थान्तरेषु आह्निकसूत्रावल्यादिषु- शुचौ देशे शुचिः सूत्रं संहतांगुलिमूलके । आवेष्ट्यषण्णवत्यां च त्रिगुणीकृत्य यत्नतः ॥ अंगुल्यग्रे तु विप्राणां क्षत्रियो मध्यपर्वतः । अंगुलिमूले तु विशां कुर्यात्सूत्रस्य वेष्टनम् ॥ षोडशाशीति विप्राणां द्वादशातीति भूभुजाम् । चतुरशीति वैश्यानामशीतिः शूद्र उच्यते ॥ अलिंगकैस्त्रिभिः सम्यक् प्रक्षाल्योद्ध्र्वृतं च यत् । अप्रदक्षिणमावृत्तः

सावित्र्या त्रिगुणीकृतम् ॥ अधः प्रदक्षिणावृत्तं समं स्यान्नवसूत्रकम् । त्रिरावेष्ट्य दृढं बद्ध्वा हरिब्रह्मेश्वरान्नमन् । त्रिवृदूर्ध्वं वृतं कार्यं तन्तुत्रयमधोवृतम् । त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरुच्यते ॥ वामावर्तं त्रिगुणं कृत्वा प्रदक्षिणावर्तं नवगुणं विधाय । तदेवं त्रिसरं कृत्वा ग्रन्थिमेकं विदध्यात् ॥ पृष्ठवंशे च नाभ्यां च वृतं यद्विन्दते कटिम् । तद्धार्यमुपवीतं स्यान्नातिलम्बं नो चोच्छ्रितम् ॥ वामस्कन्धे कृतं नाभिहृत्पृष्ठवंशयोर्धृतम् । कटिपर्यन्तमाप्नोति तावत्परिमाणं भवेत् ॥

नवतन्तुपरिमिते यज्ञसूत्रे नव तन्तुदेवताः सन्ति । ते च- ॐकारः प्रथमे तन्तौ द्वितीयेऽग्निस्तथैव च । तृतीये नागदैवत्यं चतुर्थे सोमदेवता ॥ पञ्चमे पितृदैवत्यं षष्ठे चैव प्रजापतिः । सप्तमे मारुतश्चैव अष्टमे सूर्य एव च ॥ सर्वे देवास्तु नवम इत्येता तन्तुदेवताः ॥ इति । उपर्युक्तं विधिविधानादिकं समयसापेक्षं संप्रति असम्भवं मन्यते । यथासाध्यं यज्ञोपवीतं निर्माय गंगाजलेन विधौत्य एकस्मिन् पात्रे निधाय अभिमन्त्रयेत् वैदिकविधिना । धारणान्ते आचमनम् । सूर्यार्घ्यदानम् । अन्ते अष्टोत्तरशतसंख्यको गायत्रीमन्त्रो जाप्यः ।

@नन्दप्रदीप्तकुमारः